यजामहे ऽवाव यजामहे । यजामहे स्वाहा स्वाहा यजामहे यजामहे स्वाहा ।
स्वाहेति स्वाहा ।। मो षू णो न स्सु मो मो षूण : । मो इति मो । सुन : । न
इन्द्रेन्द्र नो न इन्द्र । इन्द्रात्रात्रे न्द्रेन्द्रात्र । अत्र पृत्सु पृत्स्वत्रात्र पृत्सु । पृत्सु देवै
र्देवै : पृत्सु पृत्सु देवै : । पृत्स्विति पृत् = सु । देवै रस्त्यस्ति देवै र्देवै रस्ति ।
अस्ति हि ह्यस्त्यस्ति हि । हिष्मस्म हि हिष्म । स्मा ते ते स्म स्मा ते । ते
शुष्मि ञ्छुष्मिं स्ते ते शुष्मिन् । शुष्मिन्नवया -अवया श्शुष्मि ञ्छुष्मि न्नवया :।
अवया इत्यव = या : ।। महश्चिच्चिन्महो महश्चित् । चिद्यस्य यस्य चिच्चि द्यस्य।

यस्य मीळ्हुषो मीळ्हुषो यस्य यस्य मीळ्हुष : । मीळ्हुषो यव्या यव्या मीळ्हुषो मीळ्हुषो यव्या । यव्या हविष्मतो हविष्मतो यव्या यव्या हविष्मत :। हविष्मतो मरुतो मरुतो हविष्मतो हविष्मतो मरुत : । मरुतो वन्दते वन्दते मरुतो मरुतो वन्दते । वन्दते गी र्गी र्वन्दते वन्दते गी : । गीरिति गी : ।। अक्रन् कर्म कर्माक्र न्नक्रन् कर्म । कर्म कर्मकृत : कर्मकृत : कर्म कर्म कर्मकृत : । कर्मकृत स्सह सह कर्मकृत : कर्मकृत स्सह । कर्मकृत इति कर्म = कृत : । सह वाचा वाचा सह सह वाचा । वाचा मयोभुवा मयोभुवा वाचा वाचा मयोभुवा ।

मयोभुवेति मयः = भुवा ।। देवेभ्य : कर्म कर्म देवेभ्यो देवेभ्य : कर्म । कर्म कृत्वा कृत्वा कर्म कर्म कृत्वा । कृत्वा ऽस्त मस्तङ् कृत्वा कृत्वा ऽस्तम् । अस्तं प्र प्रास्त मस्तं प्र । प्रेतं त प्र प्रेत । इत सचाभुव स्सचाभुव इतेत सचाभुव : । सचाभुव इति सचा = भुव : ।। अवभृथ निचुंपुण निचुंपुणा वभृथा वभृथ निचुंपृण । अवभृथेत्यव = भृथ । निचुंपुण निचेरु र्निचेरु र्निचुंपुण निचुंपुण निचेरु : । निचुंपुणेति नि = चुंपुण । निचेरु रस्यसि निचेरु र्निचेरु रसि । निचेरुरिति नि = चेरु : । असि निचुंपुण निचुंपुणा स्यसि निचुंपुण ।

निचुंपुणावाव निचुंपुण निचुंपुणाव । निचुंपुणेतिनि = चुंपुण । अव देवै र्देवै रवाव देवै : । देवै र्देवकृतन् देवकृतन् देवै र्देवै र्देवकृतम् । देवकृत मेन एनो देवकृतन् देवकृत मेन : । देवकृत मिति देव = कृतम् । एनो ऽयासिष मयासिष मेन एनो ऽयासिषम् । अयासिष मवावा यासिष मयासिष मव । अव मर्त्यै र्मर्त्यै रवाव मर्त्यै : । मर्त्यै र्मर्त्यकृतं मर्त्यकृतं मर्त्यै र्मर्त्यै र्मर्त्यकृतम् । मर्त्यकृतं पुरुराव्ण : पुरुराव्णो मर्त्यकृतं मर्त्यकृतं पुरुराव्ण : । मर्त्यकृत मिति मर्त्य = कृतम् । पुरुराव्णो देव देव पुरुराव्ण : पुरुराव्णो देव । पुरुराव्ण इति पुरु = राव्ण : ।

देव रिषो रिषो देव देव रिष : । रिष स्पाहि पाहि रिषो रिष स्वाहि । पाहीति पाहि ।।५।।

पूर्णा दर्वि दर्वि पूर्णा पूर्णा दर्वि । दर्वि परा परा दर्वि दर्वि परा । परा पत पत परा परा पत । पत सुपूर्णा सुपूर्णा पत पत सुपूर्णा । सुपूर्णा पुन : पुन स्सुपूर्णा सुपूर्णा पुन : । सुपूर्णेति सु = पूर्णा । पुन रापत पता पुन : पुन रापत । आपत । पतेति पत ।। वस्नेव वि वि वस्नेव वस्नेव वि । वस्नेवेति वस्ना =

इव । वि क्रीणावहै क्रीणावहै वि वि क्रीणावहै । क्रीणावहा - इष मिषङ् क्रीणावहै क्रीणावहा - इषम् । इष मूर्ज मूर्ज मिष मिष मूर्जम् । ऊर्जा शतक्रतो शतक्रत ऊर्ज मूर्जा शतक्रतो । शतक्रतो इति शत = क्रतो ।। देहि मे मे देहि देहि मे । मे ददामि ददामि मे मे ददामि । ददामि ते ते ददामि ददामि ते । ते नि नि ते ते नि । नि मे मे नि नि मे । मे धेहि धेहि मे मे धेहि । धेहि नि नि धेहि धेहि नि । नि ते ते नि नि ते । ते दधौ दधौ ते ते दधौ । दधा इति दधौ ।। निहारन् नि नि निहारन् निहारन् नि । निहार मिति नि = हारम् । नि

हरामि हरामि नि नि हरामि । हरामि ते ते हरामि हरामि ते । ते निहारन्
निहारन् ते ते निहारम् । निहारन् नि नि निहारन् निहारन् नि । निहार मिति
नि = हारम् । नि हरासि हरासि नि नि हरासि । हरासि मे मे हरासि हरासि
मे । मे स्वाहा स्वाहा मे मे स्वाहा । स्वाहेति स्वाहा ।।६।।

अक्षन्न मीमदन्ता मिमदन्ता क्षन्न क्षन्न मीमदन्त । अमीमदन्त हि ह्यमीमदन्ता
मीमदन्त हि । ह्यवाव हिह्यव । अव प्रिया : प्रिया - अवाव प्रिया : । प्रिया -

अधूषता धूषत प्रिया : प्रिया - अधूषत । अधूषतेत्य धूषत ।। अस्तोषत स्वभानवस् स्वभानवो ऽस्तोषता स्तोषत स्वभानव : । स्वभानवो विप्रा विप्रास् स्वभानवस् स्वभानवो विप्रा : । स्वभानव इति स्व = भानव : । विप्रा नविष्ठया नविष्ठया विप्रा विप्रा नविष्ठया । नविष्ठया मती मती नविष्ठया नविष्ठया मती । मती योज योज मती मती योज । योजा नु नु योज योजा नु । न्विन्द्रेन्द्र नुन्विन्द्र । इन्द्र ते त इन्द्रेन्द्र ते । ते हरी हरी ते ते हरी । हरी इति हरी ।। सुसन्दृशन् त्वा त्वा सुसन्दृशं९ सुसन्दृशन् त्वा । सुसन्दृश मिति सु = सन्दृशम् ।

त्वा वयँ वयन् त्वा त्वा वयम् । वयं मघवन् मघवन् वयँ वयं मघवन् । मघवन् वन्दिषीमहि वन्दिषीमहि मघवन् मघवन् वन्दिषीमहि । मघवन्निति मघ - वन् । वन्दिषीमहीति वन्दिषीमहि ।। प्र नूनन् नूनं प्र प्र नूनम् । नूनं पूर्णवन्धुर : पूर्णवन्धुरो नूनन् नूनं पूर्णवन्धुर : । पूर्णवन्धुर स्तुत स्तुत : पूर्णवन्धुर : पूर्णवन्धुर स्तुत : । पूर्णवन्धुर इति पूर्ण - वन्धुर : । स्तुतो यासि यासि स्तुत स्तुतो यासि । यासि वशान् वशान्यासि यासि वशान् । वशाँ - अन्वनु वशान् वशाँ - अनु । अनु योज योजान्वनु योज । योजा नु नु योज योजा नु । न्विन्द्रेन्द्र

नुन्विन्द्र । इन्द्र ते त इन्द्रेन्द्र ते । ते हरी हरी ते ते हरी । हरी इति हरी ॥
मनो नु नु मनो मनो नु । न्वा हुवामहे हुवामह आनुन्वा हुवामहे । आहुवामहे ।
हुवामहे नाराशंसेन नाराशꣳसेन हुवामहे हुवामहे नाराशंसेन । नाराशंसेन
स्तोमेन स्तोमेन नाराशꣳसेन नाराशंसेन स्तोमेन । स्तोमे नेति स्तोमेन ॥
पितॄणा ञ्चच पितॄणां पितॄणा ञ्च । च मन्मभि र्मन्मभिश्च च मन्मभि : । मन्मभि
रिति मन्म = भि : ॥ आ नो न आ न : । न एत्वेतु नो न एतु । एतु मनो
मन एत्वेतु मन : । मन : पुन : पुन र्मनो मन : पुन : । पुन : क्रत्वे क्रत्वे

पुन : पुन : क्रत्वे । पुन रिति पुन : । क्रत्वे दक्षाय दक्षाय क्रत्वे क्रत्वे दक्षाय।
दक्षाय जीवसे जीवसे दक्षाय दक्षाय जीवसे । जीवस इति जीवसे ।। ज्योक् च च
ज्योग् ज्योक् च । च सर्यं सूर्यञ्च च सूर्यम् । सूर्यन् दृशे दृशे सूर्यं सूर्यन् दृशे।
दृश इति दृशे ।। पुन र्नो न : पुन : पुन र्न : । न : पितर : पितरो नो न :
पितर : । पितरो मनो मन : पितर : पितरो मन : । मनो ददातु ददातु मनो
मनो ददातु । ददातु दैव्यो दैव्यो ददातु ददातु दैव्य : । दैव्यो जनो जनो दैव्यो
दैव्यो जन : । जन इति जन : ।। जीवँ व्रातँ व्रात ञ्जीव ञ्जीवँ व्रातम् । व्राताँ

सचेमहि सचेमहि व्रातँ व्राताँ सचेमहि । सचेमहीति सचेमहि ।। वयाँ सोम सोम वयँ वयाँ सोम । सोम व्रते व्रते सोम सोम व्रते । व्रते तव तव व्रते व्रते तव । तव मनो मन स्तव तव मन : । मन स्तनूषु तनूषु मनो मन स्तनूषु । तनूषु बिभ्रतो बिभ्रत स्तनूषु तनूषु बिभ्रत : । बिभ्रत इति बिभ्रत : ।। प्रजावन्त स्सचेमहि सचेमहि प्रजावन्त : प्रजावन्त स्सचेमहि । प्रजावन्त इति प्रजा = वन्त : । सचेमहीति सचेमहि ।।७।।

एष ते त एष एष ते । ते रुद्र रुद्र ते ते रुद्र । रुद्र भागो भागो रुद्र रुद्र भाग : । भाग स्सह सह भागो भाग स्सह । सह स्वस्रा स्वस्रा सह सहस्वस्रा । स्वस्रा ऽम्बिकया ऽम्बिकया स्वस्रा स्वस्रा ऽम्बिकया । अम्बिकया तन्त मम्बिकया ऽम्बिकया तम् । तञ्जुषस्व जुषस्व तन्त ञ्जुषस्व । जुषस्व स्वाहा स्वाहा जुषस्व जुषस्व स्वाहा । स्वाहैष एष स्वाहा स्वाहैष : । एष ते त एष एष ते । ते रुद्र रुद्र ते ते रुद्र । रुद्र भागो भागो रुद्र रुद्र भाग : । भाग आखु राखु र्भागो भाग आखु : । आखुस्ते त आखु राखुस्ते । ते पशु : पशुस्ते ते

पशु : । पशु रवाव पशु : पशुरव । अव रुद्रꣳ रुद्र मवाव रुद्रम् । रुद्र मदीमह्यदीमहि रुद्रꣳ रुद्र मदीमहि । अदीमह्यवावा दीमह्यदी मह्यव । अव देवन् देव मवाव देवम् । देवन् त्र्यम्बकन् त्र्यम्बकन् देवन् देवन् त्र्यम्बकम् । त्र्यम्बकँ य्यथा यथा त्र्यम्बकन् त्र्यम्बकँ य्यथा । त्र्यम्बक मिति त्रि = अम्बकम् । यथा नो नो यथा यथा न : । नो वस्यसो वस्यसो नो नो वस्यस : । वस्यस स्करत् करद् वस्यसो वस्यस स्करत् । करद्यथा यथा करत्कर द्यथा । यथा नो नो यथा यथा न : । न श्श्रेयस श्श्रेयसो नो न श्श्रेयस : । श्रेयस स्कर त्करच्छ्रेयस श्श्रेयस

स्करत् । कर द्यथा यथा करत्कर द्यथा । यथा नो नो यथा यथा न ः । नो
व्यवसाययाद् व्यवसायया न्नो नो व्यवसाययात् । व्यवसाययाद् भेषजं भेषजँ
व्यवसाययाद् व्यवसाययाद् भेषजम् । व्यवसायया दितिवि = अवसाययात् ।
भेषज मस्यसि भेषजं भेषजमसि । असि भेषजं भेषज मस्यसि भेषजम् ।
भेषजङ्गवे गवे भेषजं भेषजङ्गवे । गवे ऽश्वायाश्वाय गवे गवे ऽश्वाय । अश्वाय
पुरुषाय पुरुषाया श्वाया श्वाय पुरुषाय । पुरुषाय भेषजं भेषजं पुरुषाय पुरुषाय
भेषजम् । भेषजाँ सुग९ सुगं भेषजं भेषजाँ सुगम् । सुगं मेषाय मेषाय सुग९ सुगं

मेषाय । सुगमिति सु = गम् । मेषाय मेष्यै मेष्यै मेषाय मेषाय मेष्यै । मेष्या इति मेष्यै ।। त्र्यम्बकँ य्यजामहे यजामहे त्र्यम्बकन् त्र्यम्बकँ य्यजामहे । त्र्यम्बक मिति त्रि = अम्बकम् । यजामहे सुगन्धिꣳ सुगन्धिँ य्यजामहे यजामहे सुगन्धिम्। सुगन्धिं पुष्टिवर्धनं पुष्टिवर्धनꣳ सुगन्धिꣳ सुगन्धिं पुष्टिवर्धनम् । सुगन्धिमिति सु - गन्धिम् । पुष्टिवर्धन मिति पुष्टि = वर्धनम् ।। उर्वारुकमिव बन्धनाद् बन्धना दुर्वारुक मिवोर्वा रुकमिव बन्धनात् । उर्वारुक मिवेत्युर्वा रुकं = इव । बन्धनान् मृत्यो र्मृत्यो र्बन्धनाद् बन्धनान् मृत्योः । मृत्यो र्मुक्षीय मुक्षीय मृत्यो र्मृत्यो

मुक्षीय । मुक्षीय मा मा मुक्षीय मुक्षीय मा । माऽमृता दमृतान् मा मा ऽमृतात्।
अमृता दित्यमृतात् ।। त्र्यम्बकँ य्यजामहे यजामहे त्र्यम्बकन् त्र्यम्बकँ य्यजामहे ।
त्र्यम्बक मिति त्रि - अम्बकम् । यजामहे सुगन्धिꣳ सुगन्धिँ य्यजामहे यजामहे
सुगन्धिम् । सुगन्धिं पतिवेदनं पतिवेदनꣳ सुगन्धिꣳ सुगन्धिं पतिवेदनम् ।
सुगन्धिमिति सु - गन्धिम् । पतिवेदन मिति पति - वेदनम् ।। उर्वारुकमिव
बन्धनाद् बन्धना दुर्वारुकमिवोर्वा रुकमिव बन्धनात् । उर्वारुक मिवेत्युर्वा रुकं -
इव । बन्धना दित इतो बन्धनाद् बन्धना दित ः । इतो मुक्षीय मुक्षी येत इतो

मुक्षीय । मुक्षीय मा मा मुक्षीय मुक्षीय मा । मा ऽमुतो ऽमुतो मा माऽमुत : ।
अमुत इत्यमुत : ।। एतेन रुद्र रुद्रै ते नैतेन रुद्र । रुद्रा वसेना वसेन रुद्र रुद्रा
वसेन । अवसेन पर : परो ऽवसेना वसेन पर : । परो मूजवतो मूजवत : पर :
परो मूजवत : । मूजवतो ऽत्यति मूजवतो मूजवतो ऽति । मूजवत इति मूज =
वत : । अतीही ह्यतीहि । इह्य वततधन्वा ऽवततधन्वेहीह्यव ततधन्वा ।
अवततधन्वा पिनाकावस : पिनाका वसोऽवततधन्वा ऽवततधन्वा पिनाकावस :।
अवततधन्वे त्यवतत = धन्वा । पिनाकावस : कृत्तिवासा : कृत्तिवासा :

पिनाकावस : पिनाका वस : कृत्तिवासा : । पिनाकावस इति पिनाक = अवस : । कृत्तिवासा - अहींसन् नहिंऽसन् कृतिवासा : कृत्तिवासा - अहींसन्। कृत्तिवासा इति कृत्तिं = वासा : । अहींसन्नो नो ऽहिंऽसन्नहींसन्न : । नश्शिव श्शिवो नो न श्शिव : । शिव श्शान्त श्शान्त श्शिव श्शिव श्शान्त : । शान्तो ऽत्यति शान्त श्शान्तो ऽति । अतीही ह्यत्यतीहि । इहीतीहि ।।८।।

वाजिनाँ वाजो वाजो वाजिनाँ वाजिनाँ वाज : । वाजो ऽवत्ववतु वाजो वाजो ऽवतु । अवतु भक्षो भक्षो ऽवत्ववतु भक्ष : । भक्षो - अस्मा नस्मान् भक्षो भक्षो - अस्मान् । अस्मा न्रेतो रेतोऽस्मा नस्मान्रेत : । रेत स्सिक्तꣳ सिक्तꣳ रेतो रेत स्सिक्तम् । सिक्त ममृत ममृतꣳ सिक्तꣳ सिक्त ममृतम् । अमृतं बलाय बला यामृत ममृतं बलाय । बलायेति बलाय ।। विश्वे देवा देवा विश्वे विश्वे देवा : । देवा - अभ्यभि देवा देवा - अभि । अभि यद्य दभ्यभि यत् । य त्सम्बभूवु स्सम्बभूवु र्यद्य त्सम्बभूवु : । सम्बभूवु स्तत्त त्सम्बभूवु स्सम्बभूवु

स्तत् । सम्बभूवुरिति सं = बभूवु ः । तन्मा मा तत्तन्मा । मा धिनोतु धिनोतु मा मा धिनोतु । धिनोतु प्रजया प्रजया धिनोतु धिनोतु प्रजया । प्रजया धनेन धनेन प्रजया प्रजया धनेन । प्रजयेति प्र = जया । धनेनेति धनेन ।। वाज्यह महँ वाजी वाज्यहम् । अहँ वाजिनस्य वाजिनस्याह महँ वाजिनस्य । वाजिनस्योपहत उपहतो वाजिनस्य वाजिनस्योपहूत ः । उपहूत उपहूतस्यो पहूतस्योपहूत उपहूत उपहूतस्य । उपहूत इत्युप = हूत ः । उपहूतस्य भक्षयामि भक्षयाम्युपहूत स्योपहूतस्य भक्षायामि । उपहूतस्येत्युप = हूतस्य । भक्षयामि

वाजे वाजे भक्षायामि भक्षयामि वाजे । वाजे वाजी वाजी वाजे वाजे वाजी । वाजी भूयासं भूयासँ वाजी वाजी भूयासम् । भूयासाँ सवित्रा सवित्रा भूयासं भूयासाँ सवित्रा । सवित्रा प्रसूता : प्रसता स्सवित्रा सवित्रा प्रसूता : । प्रसूता दैव्यो दैव्य : प्रसूता : प्रसूता दैव्य : । प्रसूता इति प्र = सूता : । दैव्य आप आपो दैव्यो दैव्य आप : । आप उन्दन्तू न्दत्वाप आप उन्दन्तु । उन्दन्तु ते त उन्दन्तू न्दन्तु ते । ते तनून् तनून्ते ते तनूम् । तनून् दीर्घायुत्वाय दीर्घायुत्वाय तनू न्तनून् दीर्घायुत्वाय । दीर्घायुत्वाय वर्चसे वर्चसे दीर्घायुत्वाय दीर्घायुत्वाय

वर्चसे । दीर्घायु त्वायेति दीर्घायु = त्वाय । वर्चसे कश्यपस्य कश्यपस्य वर्चसे वर्चसे कश्यपस्य । कश्यपस्य त्र्यायुषन् त्र्यायुषङ् कश्यपस्य कश्यपस्य त्र्यायुषम् । त्र्यायुषञ् जमदग्ने र्जमदग्ने स्त्र्यायुषन् त्र्यायुषञ् जमदग्ने : । त्र्यायुषमिति त्रि = आयुषम् । जमदग्ने स्त्र्यायुषन् त्र्यायुषञ् जमदग्ने र्जमदग्ने स्त्र्यायुषम् । जमदग्ने रिति जमत् = अग्ने : । त्र्यायुषँ य्यद्यत् त्र्यायुषन् त्र्यायुषँ य्यत् । त्र्यायुषमिति त्रि = आयुषम् । यद् देवानान् देवानाँ य्यद्यद् देवानाम् । देवानान् त्र्यायुषन् त्र्यायुषन् देवानान् देवानान् त्र्यायुषम् । त्र्यायुषन् तत्तत् त्र्यायुषन् त्र्यायुषन् तत् ।

त्र्यायुषमिति त्रि = आयुषम् । तन्मे मे तत्तन्मे । मे - अस्त्वस्तु मे मे - अस्तु । अस्तु त्र्यायुषन् त्र्यायुष मस्त्वस्तु त्र्यायुषम् । त्र्यायुषँ य्येन येन त्र्यायुषन् त्र्यायुषँ य्येन । त्र्यायुषमिति त्रि = आयुषम् । येन धाता धाता येन येन धाता । धाता बृहस्पते र्बृहस्पते र्धाता धाता बृहस्पते : । बृहस्पते रिन्द्रस्येन्द्रस्य बृहस्पते र्बृहस्पते रिन्द्रस्य । इन्द्रस्य च चेन्द्रस्येन्द्रस्य च । चायुष आयुषे च चायुषे । आयुषे ऽवप दवप दायुष आयुषे ऽवपत् । अवप त्तेन तेनावप दवप त्तेन । तेन ते ते तेन तेन ते । ते वपामि वपामि ते ते वपामि । वपामि ब्रह्मणा ब्रह्मणा

वपामि वपामि ब्रह्मणा । ब्रह्मणा ज़ीवातवे जीवातवे ब्रह्मणा ब्रह्मणा जीवातवे ।
जीवातवे जीवनाय जीवनाय जीवातवे जीवातवे जीवनाय । जीवनाय दीर्घायुत्वाय
दीर्घायुत्वाय जीवनाय जीवनाय दीर्घायुत्वाय । दीर्घायुत्वाय बलाय बलाय
दीर्घायुत्वाय दीर्घायुत्वाय बलाय । दीर्घायुत्वायेति दीर्घायु = त्वाय । बलाय
वर्चसे वर्चसे बलाय बलाय वर्चसे । वर्चसे सुप्रजास्त्वाय सुप्रजास्त्वाय वर्चसे
वर्चसे सुप्रजास्त्वाय । सुप्रजास्त्वाय च च सुप्रजास्त्वाय सुप्रजास्त्वाय च ।
सुप्रजास्त्वायेति सुप्रजा : = त्वाय । चासा - असौ च चासौ । असा - अथो -

अथो - असा - असा - अथो । अथो जीव जीवाथो - अथो जीव । अथो इत्यथो । जीव शरद श्शरदो जीव जीव शरद : । शरद श्शतं शतं शरद श्शरद श्शतम् । शतमिति शतम् ।।९।।

## इति तृतीयोऽध्याय :

# अथ चतुर्थोऽध्याय :

ॐ एद मिदमेदम् । इद मंगन्मा गन्मेद मिद मंगन्म । अगन्म देवयजंनन्
देवयजंन मगन्मा गन्म देवयजंनम् । देवयजंनं पृथिव्या : पृंथिव्या दैंवयजंनन्
देवयजंनं पृथिव्या : । देवयजंन मितिं देव = यजंनम् । पृथिव्या यत्र यत्रं
पृथिव्या : पृंथिव्या यत्रं । यत्रं देवासौं देवासो यत्र यत्रं देवासं : । देवासो -
अजुंषन्ता जुंषन्त देवासौं देवासो - अजुंषन्त । अजुंषन्त विश्वे विश्वे ऽजुंषन्ता

जुषन्त विश्वे । विश्व इति विश्वे ।। ऋक्सामाभ्याꣳ सन्तरन्त स्सन्तरन्त ऋक् सामाभ्यां मृक्सामाभ्याꣳ सन्तरन्त ः । ऋक्सामाभ्या मित्यृक् - सामाभ्याम् । सन्तरन्तो यजुर्भि र्यजुर्भि स्सन्तरन्त स्सन्तरन्तो यजुर्भि ः । सन्तरन्त इति सं = तरन्त ः । यजुर्भी - रायो रायो यजुर्भि र्यजुर्भी - राय ः । यजुर्भि रिति यजु ः = भि ः । रायस्पोषेण पोषेण रायो राय स्पोषेण । पोषेण सꣳ सं पोषेण पोषेण सम् । समिषेषा सꣳ समिषा । इषा मदेम मदे मेषेषा मदेम । मदेमेति मदेम ।। इमा - आप आप इमा इमा - आप ः । आपश्शꣳ शमाप आप श्शम् । शमु मे

म उ श९ शमुमे । ऊँ इत्यूँ । मे सन्तु सन्तु मे मे सन्तु । सन्तु देवी र्देवी स्सन्तु सन्तु देवी ः । देवी रोषध ओषधे देवी र्देवी रोषधे । ओषधे त्रायस्व त्राय स्वौषध ओषधे त्रायस्व । त्रायस्व स्वधिते स्वधिते त्रायस्व त्रायस्व स्वधिते । स्वधिते मा मा स्वधिते स्वधिते मा । स्वधित इति स्व = धिते । मैनमेनं मा मैनम् । एनाँ हींसी र्हि९सी रेनमेनाँ हींसी ः । हींसी रिति हींसी ः । आपो - अस्मा नस्मा नाप आपो - अस्मान् । अस्मान् मातरो मातरो ऽस्मा नस्मान् मातर ः । मातर श्शुन्धयन्तु शुन्धयन्तु मातरो मातर श्शुन्धयन्तु । शुन्धयन्तु

घृतेन घृतेन शुन्ध यन्तु शुन्धयन्तु घृतेन । घृतेन नो नो घृतेन घृतेन न : । नो घृउप्वो घृतप्वो नो नो घृतप्व : । घृतप्व : पुनन्तु पुनन्तु घृतप्वो घृतप्व : पुनन्तु । घृतप्व इति घृत = प्व : । पुनन्त्विविति पुनन्तु ।। विश्वाँ हि हि विश्वँ विश्वाँ हि । हि रिप्रꣳ रिप्रꣳ हि हि रिप्रम् । रिप्रं प्रवहन्ति प्रवहन्ति रिप्रꣳ रिप्रं प्रवहन्ति । प्रवहन्ति देवी र्देवी : प्रवहन्ति प्रवहन्ति देवी : । प्रव हन्तीति प्र = वहन्ति । देवी रुदुद् देवी र्देवी रुत् । उदिदि दुदु दित् । इदाभ्य आभ्य इदि दाभ्य : । आभ्य श्शुचि श्शुचिं राभ्य आभ्य श्शुचि : । शुचि रापूत : पूत आ

शुचि श्शुचि रापूत ः । आपूत ः । पूत एंम्येमि पूत ः पूत एंमि । एमीत्येंमि ।।
दीक्षातपसों स्तनू स्तनू दींक्षातपसों दींक्षातपसों स्तनू ः । तनू रंस्यसि तनू स्तनू
रंसि । असि तान्ता मंस्यसि ताम् । ता न्त्वां त्वा तान्ता न्त्वां । त्वा शिवा२ं
शिवा न्त्वां त्वा शिवाम् । शिवा२ं शग्मा२ं शग्मा२ं शिवा२ं शिवा२ं शग्माम् ।
शग्मां परि परिं शग्मा२ं शग्मां परिं । परिं दधे दधे परि परिं दधे । दधे भद्रं भद्र
न्दंधे दधे भद्रम् । भद्रं वर्णं वर्णम् भद्रं भद्रं वर्णम् । वर्णं पुष्यन् पुष्यन् वर्णं वर्णं
पुष्यंन् । पुष्य न्निति पुष्यंन् ।।१।।

महीनां पय : पयो महीनाम् महीनां पय : । पयो ऽस्यसि पय : पयोऽसि । असि वर्चोदा वर्चोदा - अस्यसि वर्चोदा : । वर्चोदा - अस्यसि वर्चोदा वर्चोदा - असि । वर्चोदा इति वर्च : = दा : । असि वर्चो वर्चो ऽस्यसि वर्च : । वर्चो मे मे वर्चो वर्चो मे । मे देहि देहि मे मे देहि । देहि वृत्रस्य वृत्रस्य देहि देहि वृत्रस्य । वृत्रस्य कनीनका कनीनका वृत्रस्य वृत्रस्य कनी नका । कनीनका ऽस्यसि कनीनका कनीनका ऽसि । असि चक्षुर्दा श्चक्षुर्दा - अस्यसि चक्षुर्दा : । चक्षुर्दा - अस्यसि चक्षुर्दा श्चक्षुर्दा - असि । चक्षुर्दा इति चक्षु : = दा : । असि

चक्षु श्चक्षु रस्यसि चक्षु : । चक्षुर्मे मे चक्षु श्चक्षुर्मे । मे देहि देहि मे मे देहि ।
देहि चित्पति श्चित्पति र्देहि देहि चित्पति : । चित्पति र्मा मा चित्पति श्चित्पति
र्मा । चित्पति रिति चित् = पति : । मा पुनातु पुनातु मा मा पुनातु । पुनातु
वाक्पति र्वाक्पति : पुनातु पुनातु वाक्पति : । वाक्पति र्मा मा वाक्पति र्वाक्पति
र्मा । वाक्पति रिति वाक् = पति : । मा पुनातु पुनातु मा मा पुनातु । पुनातु
देवो देव : पुनातु पुनातु देव : । देवो मा मा देवो देवो मा । मा सविता
सविता मा मा सविता । सविता पुनातु पुनातु सविता सविता पुनातु ।

पुनात्वच्छिद्रेणा च्छिद्रेण पुनातु पुनात्वच्छिद्रेण । अच्छिद्रेण पवित्रेण पवित्रेणा च्छिद्रेणा च्छिद्रेण पवित्रेण । पवित्रेण सूर्यस्य सूर्यस्य पवित्रेण पवित्रेण सूर्यस्य । सूर्यस्य रश्मिभी - रश्मिभि स्सूर्यस्य सूर्यस्य रश्मिभिः । रश्मिभि स्तस्य तस्य रश्मिभी - रश्मिभि स्तस्य । रश्मिभि रिति रश्मि = भिः । तस्य ते ते तस्य तस्य ते । ते पवित्रपते पवित्रपते ते ते पवित्रपते । पवित्रपते पवित्रपूतस्य पवित्रपूतस्य पवित्रपते पवित्रपते पवित्रपूतस्य । पवित्रपत इति पवित्र = पते । पवित्र पूतस्य यत्कामो यत्काम : पवित्रपूतस्य पवित्रपूतस्य यत्काम : । पवित्र

पूतस्येति पवित्रं = पूतस्य । यत्काम : पुने पुने यत्कामो यत्काम : पुने । यत्काम इति यत् = काम : । पुने तत्तत्पुने पुने तत् । तच्छकेय९ शकेयन् तत्तच्छ केयम् । शकेयमिति शकेयम् ।। आवो व आव : । वो देवासो देवासो वो वो देवास : । देवास ईमह ईमहे देवासो देवास ईमहे । ईमहे वामँ वाम मीमह ईमहे वामम् । वामं प्रयति प्रयति वामँ वामं प्रयति । प्रयत्यध्वरे ऽध्वरे प्रयति प्रयत्यध्वरे । प्रयतीति प्र = यति । अध्वर इत्यध्वरे ।। आ वो व आ व : । वो देवासो देवासो वो वो देवास : । देवास आशिषं आशिषो देवासो

देवास आशिषं ः । आशिषों यज्ञियांसो यज्ञियांस आशिषं आशिषों यज्ञियांस ः ।
आशिष इत्या = शिषं ः । यज्ञियांसो हवामहे हवामहे यज्ञियांसो यज्ञियांसो
हवामहे । हवामह इतिं हवामहे ।। स्वाहां यज्ञँ य्यज्ञ९ स्वाहा स्वाहां यज्ञम् ।
यज्ञं मनंसो मनंसो यज्ञँ य्यज्ञं मनंस ः । मनंस उरो रुरो र्मनंसो मनंस उंरो ः ।
उरो रन्तरिंक्षा दन्तरिंक्षा दुरो रुरो रन्तरिंक्षात् । अन्तरिं क्षाद् द्यावांपृथिवीभ्यान्
द्यावांपृथिवीभ्यां मन्तरिंक्षा दन्तरिंक्षाद् द्यावांपृथिवी भ्यांम् । द्यावांपृथिवीभ्याँ

वाताद् वाताद् द्यावापृथिवीभ्यान् द्यावापृथिवीभ्याँ वातात् । वाता दारभे रभ आ

वाताद् वाता दारभे । आरभे । रभ इति रभे ।।२।।

ओंकूत्यै प्रयुजे प्रयुज आकूत्या - आकूत्यै प्रयुजे । आकूत्या इत्या - कूत्यै ।
प्रयुजे ऽग्नये ऽग्नये प्रयुजे प्रयुजे ऽग्नये । प्रयुज इति प्र - युजे । अग्नये स्वाहा
स्वाहा ऽग्नये ऽग्नये स्वाहा । स्वाहा मेधायै मेधायै स्वाहा स्वाहा मेधायै । मेधायै
मनसे मनसे मेधायै मेधायै मनसे । मनसे दीक्षायै दीक्षायै मनसे मनसे दीक्षायै ।

दीक्षायै तपसे तपसे दीक्षायै दीक्षायै तपसे । तपसे सरस्वत्यै सरस्वत्यै तपसे तपसे सरस्वत्यै । सरस्वत्यै पूष्णे पूष्णे सरस्वत्यै सरस्वत्यै पूष्णे । पूष्णे ऽग्नये ऽग्नये पूष्णे पूष्णे ऽग्नये । अग्नये स्वाहा स्वाहा ऽग्नये ऽग्नये स्वाहा । स्वा हेति स्वाहा ।। आपो देवी र्देवी राप आपो देवी ः । देवी र्बृहती र्बृहती र्देवी र्देवी र्बृहती ः । बृहती र्विश्वशंभुवो विश्वशंभुवो बृहती र्बृहती र्विश्वशंभुव ः । विश्वशंभुवो द्यावापृथिवी द्यावापृथिवी विश्वशंभुवो विश्वशंभुवो द्यावापृथिवी । विश्वशंभुव इति विश्व = शंभुव ः । द्यावापृथिवी उरूरु द्यावापृथिवी द्यावा पृथिवी

उरु । द्यावापृथिवी इति द्यावापृथिवी । उर्वन्तरिक्षान्तरिक्षो रूर्वन्तरिक्ष ।
अन्तरिक्षेत्यन्तरिक्ष ।। बृहस्पतये हविषा हविषा बृहस्पतये बृहस्पतये हविषा ।
हविषा वेधेम विधेम हविषा हविषा विधेम । विधेम स्वाहा स्वाहा विधेम विधेम
स्वाहा । स्वाहेति स्वाहा ।। विश्वो देवस्य देवस्य विश्वो विश्वो देवस्य । देवस्य
नेतु र्नेतु र्देवस्य देवस्य नेतु ः । नेतु र्मर्तो मर्तो नेतु र्नेतु र्मर्त ः । मर्तो वुरीत
वुरीत मर्तो मर्तो वुरीत । वुरीत सख्य९ सख्यँ वुरीत वुरीत सख्यम् । सख्यमिति
सख्यम् । विश्वो राये राये विश्वो विश्वो राये । राय इषुध्यती षुध्यति राये राय

इषुध्यति । इषुध्यति द्युम्नन् द्युम्न मिषुध्यती षुध्यति द्युम्नम् । द्युम्नँ वृणीत वृणीत द्युम्नन् द्युम्नँ वृणीत । वृणीत पुष्यसे पुष्यसे वृणीत वृणीत पुष्यसे । पुष्यसे स्वाहा स्वाहा पुष्यसे पुष्यसे स्वाहा । स्वाहेति स्वाहा ।।३।।

ऋक्सामयो श्शिल्पे शिल्पे ऋक्सामयो र्ऋक्सामयो श्शिल्पे । ऋक्सामयो रित्यृक् = सामयो ः । शिल्पे स्थ स्थ श्शिल्पे शिल्पे स्थ ः । शिल्पे इति शिल्पे । स्थस्ते ते स्थ स्थस्ते । ते वां वान् ते ते वाम् । ते इति ते । वामा रभे रभ आवाम्व् वामा

रभे । आरभे । रभे ते ते रभे रभे ते । ते मा मा ते ते मा । ते इति ते । मा पातं पातं मा मा पातम् । पातमास्यास्या पातं पात मास्य । आस्य । अस्य यज्ञस्य यज्ञ स्यास्यास्य यज्ञस्य । यज्ञस्योदृच उदृचो यज्ञस्य यज्ञस्योदृच ः । उदृच श्शर्म शर्मोदृच उदृच श्शर्म । उदृच इत्युत् - ऋच ः । शर्मास्यसि शर्म शर्मासि। असि शर्म शर्मा स्यसि शर्म । शर्म मे मे शर्म शर्म मे । मे यच्छ यच्छ मे मे यच्छ । यच्छ नमो नमो यच्छ यच्छ नम ः । नमस्ते ते नमो नमस्ते । ते - अस्त्वस्तु ते ते - अस्तु । अस्तु मा मा ऽस्त्वस्तु मा । मा मा मा मा मा मा ।

मा सींसी हिंꣳसी मर्मा मा हींसी ः । हींसी रूर्गू ग्घिंꣳसी हींसी रूर्क् । ऊर्गस्यस्यूर्गूर्गसि । अस्याङ्गिरस्या ङ्गिरस्यंस्यस्याङ्गिरसि । आङ्गिरस्यूर्णम्रदा - ऊर्णम्रदा - आङ्गिरस्याङ्गिरस्यूर्णम्रदा ः । ऊर्णम्रदा ऊर्ज मूर्ज मूर्णम्रदा - ऊर्णम्रदा - ऊर्जम् । ऊर्णम्रदा इत्यूर्ण = म्रदा ः । ऊर्जम् मे म ऊर्ज मूर्जम् मे । मे यच्छ यच्छ मे मे यच्छ । यच्छ सोमस्य सोमस्य यच्छ यच्छ सोमस्य । सोमस्य नीवि र्नीवि स्सोमस्य सोमस्य नीवि ः । नीवि रस्यसि नीवि र्नीवि रसि । असि विष्णो र्विष्णो रस्यसि विष्णो ः । विष्णो श्शर्म शर्म विष्णो र्विष्णो श्शर्म । शर्मास्यसि

शर्म शर्मासि । असि शर्म शर्मास्यसि शर्म । शर्म यजमानस्य यजमानस्य शर्म शर्म यजमानस्य । यजमानस्येन्द्रस्येन्द्रस्य यजमानस्य यजमानस्येन्द्रस्य । इन्द्रस्य योनि र्योनि रिन्द्रस्येन्द्रस्य योनि : । योनि रस्यसि योनि र्योनि रसि । असि सुसस्या स्सुसस्या - अस्यसि सुसस्या : । सुसस्या : कृषी : कृषी स्सुसस्या स्सुसस्या : कृषी : । सुसस्या इति सु = सस्या : । कृषीस्कृधि कृधि कृषी : कृषीस्कृधि । कृध्युदुत्कृधि कृध्युत् । उच्छ्रयस्व श्रयस्वो दुच्छ्रयस्व । श्रयस्व वनस्पते वनस्पते श्रयस्व श्रयस्व वनस्पते । वनस्पत ऊर्ध्व ऊर्ध्वो वनस्पते वनस्पत ऊर्ध्व : ।

ऊर्ध्वो मा मोर्ध्व ऊर्ध्वोमा । मा पाहि पाहि मा मा पाहि । पाह्याँहसो॒ऽ हस : पाहि पाह्याँहस : । आँहस आस्यास्याऽ हसोऽ हस आस्य । आस्य । अस्य यज्ञस्य यज्ञस्यास्यास्य यज्ञस्य । यज्ञस्योदृच उदृचो यज्ञस्य यज्ञस्योदृच : । उदृच इत्युत् - ऋच : ।।४।।

व्रतङ् कृणुत कृणुत व्रतँ व्रतङ् कृणुत । कृणुत व्रतँ व्रतङ् कृणुत कृणुत व्रतम् । व्रतङ् कृणुत कृणुत व्रतँ व्रतङ् कृणुत । कृणुताग्नि रग्नि : कृणुत कृणुताग्नि : ।

अग्नि र्ब्रह्म ब्रह्माग्नि रग्नि र्ब्रह्म । ब्रह्माग्नि रग्नि र्ब्रह्म ब्रह्माग्नि ः । अग्नि र्यज्ञो यज्ञो ऽग्नि रग्नि र्यज्ञ ः । यज्ञो वनस्पति र्वनस्पति र्यज्ञो यज्ञो वनस्पति ः । वनस्पति र्यज्ञियो यज्ञियो वनस्पति र्वनस्पति र्यज्ञिय ः । यज्ञियो दैवीन् दैवीं य्यज्ञियो यज्ञियो दैवीम् । दैवी न्धियन् धियन् दैवीन् दैवी न्धियम् । धियम् मनामहे मनामहे धियन् धियम् मनामहे । मनामहे सुमृळीकाऽ सुमृळीकां मनामहे मनामहे सुमृळीकाम् । सुमृळीका मभिष्टये ऽभिष्टये सुमृळीकाऽ सुमृळीका मभिष्टये । सुमृळीकामिति सु - मृळीकाम् । अभिष्टये वर्चोदाँ वर्चोदा मभिष्टये

ऽभिष्टये वर्चोदाम् । वर्चोदाँ विश्वधायसँ विश्वधायसँ वर्चोदाँ वर्चोदाँ विश्वधायसम् । वर्चोदामिति वर्च : = दाम् । विश्वधायसाँ सुतीर्था सुतीर्था विश्वधायसँ विश्वधायसाँ सुतीर्था । विश्वधायस मिति विश्व = धायसम् । सुतीर्था नो न स्सुतीर्था सुतीर्था न : । सुतीर्थेति सु = तीर्था । नो - अस दसन्नो नो - असत् । असद् वशे वशे ऽसदसद् वशे । वशे ये ये वशे वशे ये । ये देवा देवा ये ये देवा : । देवा मनोजाता मनोजाता देवा देवा मनोजाता : । मनोजाता मनोयुजो मनोयुजो मनोजाता मनोजाता मनोयुज : । मनोजाता इति मन : =

जाता ः । मनोयुजो दक्षक्रतवो दक्षक्रतवो मनोयुजो मनोयुजो दक्षक्रतव ः ।
मनोयुज इति मन ः = युज ः । दक्षक्रतव स्ते ते दक्षक्रतवो दक्षक्रतव स्ते ।
दक्षक्रतव इति दक्ष = क्रतव ः । ते नो नस्ते ते न ः । नो ऽवन्त्व वन्तु नो नो
ऽवन्तु । अवन्तु ते ते ऽवन्त्व वन्तु ते । ते नो न स्ते ते न ः । न ः पान्तु
पान्तु नो न ः पान्तु । पान्तु तेभ्य स्तेभ्य ः पान्तु पान्तु तेभ्य ः । तेभ्यस् स्वाहा
स्वाहा तेभ्य स्तेभ्य स्वाहा । स्वाहा श्वात्राश् श्वात्रा स्स्वाहा स्वाहा श्वात्रा ः ।
श्वात्रा ः पीता ः पीता श्श्वात्रा श्श्वात्रा ः पीता ः । पीता भवत भवत पीता ः

पीता भवत । भवत यूयँ य्यूयं भवत भवत यूयम् । यूय माप आपो यूयँ य्यूय माप ः । आपो - अस्माक मस्माक माप आपो - अस्माकम् । अस्माक मन्त रन्त रस्माक मस्माक मन्त ः । अन्त रुदरे उदरेऽन्त रन्त रुदरे । उदरे सुशेवा स्सुशेवा उदर उदरे सुशेवा ः । सुशेवा स्ता स्ता स्सुशेवा स्सुशेवा स्ता ः । सुशेवा इति सु - शेवा ः । ता - अस्मभ्य मस्मभ्यन् ता स्ता - अस्मभ्यम् । अस्मभ्य मयक्ष्मा - अयक्ष्मा - अस्मभ्य मस्मभ्य मयक्ष्मा ः । अयक्ष्मा - अनमीवा - अनमीवा - अयक्ष्मा - अयक्ष्मा - अनमीवा ः । अनमीवा -

अनागसो ऽनागसो ऽनमीवा - अनमीवा - अनागस ः । अनागस स्वदन्तु स्वदन्त्वनागसो ऽनागस स्स्वदन्तु । स्वदन्तु देवी र्देवी स्स्वदन्तु स्वदन्तु देवी ः । देवी रमृता - अमृता देवी र्देवी रमृता ः । अमृता ऋतावृध ऋतवृधो ऽमृता - अमृता ऋतावृध ः । ऋतावृध इय मिय मृतवृध ऋतावृध इयम् । ऋतवृध इत्यृत = वृध ः । इयन्ते त इय मियन्ते । ते यज्ञिया यज्ञिया ते ते यज्ञिया । यज्ञिया तनू स्तनू र्यज्ञिया यज्ञिया तनू ः । तनू रपोऽप स्तनू स्तनू रप ः । अपो मुञ्चामि मुञ्चाम्यपोऽपो मुञ्चामि । मुञ्चामि न न मुञ्चामि मुञ्चामि न । न प्रजां

प्रजान् न न प्रज़ाम् । प्रजामाँहो मुचोंः हो मुच : प्रजां प्रजामाँ होमुच : । प्रजामिति प्र = जाम् । आँहोमुचस् स्वाहाकृता स्वाहाकृता - अंःहो मुचोंःहो मुच स्स्वाहाकृता : । आँहो मुच इत्याँह : = मुच : । स्वाहाकृता : पृथिवीं पृथिवींः स्वाहाकृता स्वाहा कृता : पृथिवीम् । स्वाहाकृता इति स्वाहा = कृता : । पृथिवी माविंशत विशता पृथिवीं पृथिवी माविंशत । आविंशत । विशत पृथिव्या पृथिव्या विंशत विशत पृथिव्या । पृथिव्या संः सं पृथिव्या पृथिव्या सम् । सं भव भव संः सं भव । भवाग्ने ऽग्ने भव भवाग्ने । अग्ने त्व

न्त्वमग्ने ऽग्ने त्वम् । त्वाँ सु सु त्व न्त्वाँ सु । सु जागृहि जागृहि सु सु जागृहि । जागृहि वयँ वयञ् जागृहि जागृहि वयम् । वयाँ सु सु वयँ वयाँ सु । सु मन्दिषीमहि मन्दिषीमहि सु सु मन्दिषीमहि । मन्दिषीमहि रक्ष रक्ष मन्दिषीमहि मन्दिषीमहि रक्ष । रक्षा णो नो रक्ष रक्षा ण : । नो - अप्रयुच्छन्न प्रयुच्छन्नो नो - अप्रयुच्छन् । अप्रयुच्छन् प्रबुधे प्रबुधे ऽप्रयुच्छन्न प्रयुच्छन् प्रबुधे । अप्रयुच्छ न्नित्यप्र = युच्छन् । प्रबुधे नो न : प्रबुधे प्रबुधे न : । प्रबुध इति प्र = बुधे । न : पुन : पुन र्नो न : पुन : । पुन स्कृधि कृधि पुन : पुन स्कृधि ।

पुन रिति पुन : । कृधि पुन : पुन : कृधि कृधि पुन : । पुन र्मनो मन : पुन : पुन र्मन : । मन : पुन : पुन र्मनो मन : पुन : । पुन रायु रायु : पुन : पुन रायु : । आयु र्मे म आयु रायु र्मे । म आगादगा दामेम आगात् । आगात्। अगात्पुन : पुन रगा दगात्पुन : । पुन श्चक्षु श्चक्षु : पुन : पुन श्चक्षु : । पुन रिति पुन : । चक्षु : पुन : पुन श्चक्षु श्चक्षु : पुन : । पुनश् श्रोत्रं श्रोत्रं पुन : पुन श्श्रोत्रम् । पुन रिति पुन : । श्रोत्रम् मे मे श्रोत्रं श्रोत्रम् मे । म आगा दगा दामेम आगात् । आगात् । अगात्पुन : पुनरगा दगात्पुन : । पुनः प्राण : प्राणः

पुन : पुन : प्राण : । पुन रिति पुन : । प्राण : पुन : पुन : प्राण : प्राण : पुन : । पुन रात्माऽत्मा पुन : पुन रात्मा । आत्मामे म अत्मा ऽत्मामे । म आगादगा दामेम आगात् । आगात् । अगाद् वैश्वानरो वैश्वानरो ऽगादगाद् वैश्वानर : । वैश्वानरो - अदब्धो ऽदब्धो वैश्वानरो वैश्वानरो - अदब्ध : । अदब्ध स्तनूपा स्तनूपा - अदब्धो ऽदब्ध स्तनूपा : । तनूपा - अग्नि रग्नि स्तनूपा स्तनूपा - अग्नि : । तनूपा इति तनू = पा : । अग्नि र्मा माऽग्नि रग्निर्मा । मा पातु पातु मा मा पातु । पातु दुरिताद् दुरितात्पातु पातु दुरितात् । दुरिता

दवद्या दवद्याद् दुरिताद् दुरिता दवद्यात् । दुरितादिति दु : = इतात् । अवद्यादित्यवद्यात् ।। त्व मग्ने ऽग्ने त्व न्त्व मग्ने । अग्ने व्रतपा व्रतपा - अग्ने ऽग्ने व्रतपा : । व्रतपा - अस्यसि व्रतपा व्रतपा - असि । व्रतपा इति व्रत = पा : । असि देवो देवो ऽस्यसि देव : । देव आमर्त्येषु मर्त्येष्वा देवो देव आमर्त्येषु । आमर्त्येषु । मर्त्येष्वा मर्त्येषु मर्त्येष्वा । एत्या ।। त्वँ य्यज्ञेषु यज्ञेषु त्व न्त्वँ य्यज्ञेषु । यज्ञेष्वीड्य ईड्यो यज्ञेषु यज्ञेष्वीड्य : । ईड्य इतीड्य : ।। रास्वेय दिय द्रास्व रास्वेयत् । इयत्सोम सोमेय दियत्सोम । सोमा भूयो भूय आ सोम सोमा

भूयं ः । आभूयं ः । भूयो भर भर भयो भूयो भर । भर देवो देवो भर भर

देव ः । देवो नो नो देवो देवो नः । न स्सविता सविता नो न स्सविता ।

सविता वसो र्वसो स्सविता सविता वसो ः । वसो र्दाता दाता वसो र्वसो

र्दाता । दाता वसु वसु दाता दाता वसु । वस्वंदा ददाद् वसु वस्वंदात् ।

अदादित्यंदात् ।।५।।

एषा तेत एषैषाते । ते शुक्र शुक्र ते ते शुक्र । शुक्र तनू स्तनू श्शुक्र शुक्र तनूः । तनू रेत देतत्तनू स्तनू रेतत् । एतद् वर्चो वर्च एत देतद्वर्चः । वर्च स्तया तया वर्चो वर्च स्तया । तया सᳫं सन्तया तया सम् । सं भव भव सᳫं सं भव । भव भ्राजं भ्राजम् भव भव भ्राजम् । भ्राज ङ्गच्छ गच्छ भ्राजं भ्राज ङ्गच्छ। गच्छ जू र्जू र्गच्छ गच्छ जूः । जू रस्यसि जूर्जू रसि । असि धृता धृता ऽस्यसि धृता । धृता मनसा मनसा धृता धृता मनसा । मनसा जुष्टा जुष्टा मनसा मनसा जुष्टा । जुष्टा विष्णवे विष्णवे जुष्टा जुष्टा विष्णवे । विष्णवे तस्या स्तस्या विष्णवे

विष्णवे तस्याः । तस्यास्ते ते तस्या स्तस्यास्ते । ते सत्यसंवस स्सत्यसंवस स्ते

ते सत्यसंवस ः । सत्यसंवस ः प्रसवे प्रसवे सत्यसंवस स्सत्य संवस ः प्रसवे ।

सत्यसंवस इति सत्य = संवस ः । प्रसवे तनु तनु प्रसवे प्रसवे तनु । प्रसव इति

प्र = सवे । तनु यन्त्रँ य्यन्त्रन् तनु तनु यन्त्रम् । यन्त्र मशीया शीय यन्त्रँ य्यन्त्र

मशीय । अशीय स्वाहा स्वाहा ऽशीया शीय स्वाहा । स्वाहा चन्द्र श्चन्द्र१ स्वाहा

स्वाहा चन्द्रम् । चन्द्रमस्यसि चन्द्र श्चन्द्रमसि । असि शुक्र१ शुक्र मस्यसि शुक्रम्।

शुक्र ममृत ममृत१ शुक्र१ शुक्र ममृतम् । अमृतँ वैश्व देवँ वैश्वदेव ममृत ममृतँ

वैश्वदेवम् । वैश्वदेवञ् चिच्चिद् वैश्वदेवँ वैश्वदेव श्चित् । वैश्वदेव मिति वैश्व = देवम् । चिन्मना मनाचिच्चिन्मना । मना धी र्धी र्मना मना धी : । धी र्दक्षिणा दक्षिणा धी र्धी र्दक्षिणा । दक्षिणा क्षत्रिया क्षत्रिया दक्षिणा दक्षिणा क्षत्रिया । क्षत्रिया यज्ञिया यज्ञिया क्षत्रिया क्षत्रिया यज्ञिया । यज्ञिया ऽदिति रदिति र्यज्ञिया यज्ञिया ऽदिति : । अदिति रुभयतश्शीर्ष्ण्यु भयतश्शीर्ष्ण्य दिति रदिति रुभयतश्शीर्ष्णी । उभयतश्शीर्ष्णी सा सो भयतश्शीर्ष्ण्यु भयत श्शीर्ष्णी सा । उभयतश्शीर्ष्णी त्युभयत : = शीर्ष्णी । सा नो नस्सा सा न : । नस्सुप्राची

सुप्राची नो नस्सुप्राची । सुप्राची सुप्रतीची सुप्रतीची सुप्राची सुप्राची सुप्रतीची । सुप्राचीति सु = प्राची । सुप्रतीची भव भव सुप्रतीची सुप्रतीची भव । सुप्रतीचीति सु = प्रतीची । भव मित्रो मित्रो भव भव मित्र ः । मित्र स्त्वा त्वा मित्रो मित्र स्त्वा । त्वा पदि पदि त्वा त्वा पदि । पदि बध्नीतां बध्नीतां पदि पदि बध्नीताम् । बध्नीतां पूषा पूषा बध्नीतां बध्नीतां पूषा । पूषा ऽध्वनो ऽध्वन ः पूषा पूषा ऽध्वन ः । अध्वन स्पातु पात्वध्वनो ऽध्वन स्पातु । पात्विन्द्रायेन्द्राय पातु पात्विन्द्राय । इन्द्रायाध्यक्षायाध्य क्षायेन्द्रा येन्द्राया ध्यक्षाय । अध्य

क्षायान्वन्वध्यं क्षायाध्यं क्षायानु । अध्यंक्षायेत्यधि = अक्षाय । अनु त्वा त्वा ऽन्वनु त्वा । त्वा माता माता त्वां त्वा माता । माता मन्यतां मन्यतां माता माता मन्यताम् । मन्यतां पिता पिता मन्यतां मन्यतां पिता । पिता भ्राता भ्राता पिता पिता भ्राता । भ्राता सगर्भ्य स्सगर्भ्यो भ्राता भ्राता सगर्भ्य : । सगर्भ्य स्सखा सखा सगर्भ्य स्सगर्भ्य स्सखा । सगर्भ्य इति स = गर्भ्य : । सखा सयूथ्य स्सयूथ्य स्सखा सखा सयूथ्य : । सयूथ्य स्सा सा सयूथ्य स्सयूथ्य स्सा । सयूथ्य इति स = यूथ्य : । सा देवि देवि सा सा देवि । देवि देवन् देवन् देवि देवि

देवम् । देव मच्छाच्छं देवन् देव मच्छं । अच्छें हीह्यच्छाच्छें हि । इही न्द्रायेन्द्राये हीही न्द्राय । इन्द्राय सोमं सोम मिन्द्रा येन्द्राय सोमम् । सोमाँ रुद्रो रुद्र स्सोमं सोमाँ रुद्र ः । रुद्र स्त्वा त्वा रुद्रो रुद्र स्त्वा । त्वा वर्तयतु वर्तय त्वा त्वा त्वा वर्तयतु । आवर्तयतु । वर्तयतु स्वस्ति स्वस्ति वर्तयतु वर्तयतु स्वस्ति । स्वस्ति सोमसखा सोमसखा स्वस्ति स्वस्ति सोमसखा । सोमसखा पुनः पुन स्सोमसखा सोमसखा पुन ः । सोमस खेति सोम = सखा । पुन रेहीह्या पुन ः पुन रेहिं । एहिं । इहीतीहि ।।६।।

वस्व्यंस्यसि वस्वी वस्व्यंसि । अस्यदिति रदिति रस्यस्यदिति ः । अदिति रादित्या ऽऽदित्या ऽदिति रदिति रादित्या । आदित्या रुद्रा रुद्रा ऽऽदित्या ऽऽदित्या रुद्रा । रुद्रा चन्द्रा चन्द्रा रुद्रा रुद्रा चन्द्रा । चन्द्रा बृहस्पति र्बृहस्पतिं श्चन्द्रा चन्द्रा बृहस्पतिं ः । बृहस्पतिष्ट्वा त्वा बृहस्पति र्बृहस्पतिष्ट्वा । त्वा सुम्ने सुम्ने त्वा त्वा सुम्ने । सुम्ने रम्णातु रम्णातु सुम्ने सुम्ने रम्णातु । रम्णातु रुद्रो रुद्रो रम्णातु रम्णातु रुद्र ः । रुद्रो वसुभि र्वसुभी - रुद्रो रुद्रो वसुभि ः । वसुभि राचके चक आ वसुभि र्वसुभि राचके । वसुभि रिति वसु = भि ः । आचके । चके

ऽदित्या - अदित्या श्चके चके ऽदित्या ः । अदित्या स्त्वा त्वाऽदित्या - अदित्या स्त्वा । त्वा मूर्धन् मूर्धꣳ स्त्वा त्वा मूर्धन् । मूर्धन्नाजिघर्मि जिघर्म्या मूर्धन् मूर्धन्ना जिघर्मि । आजिघर्मि । जिघर्मि देवयजने देवयजने जिघर्मि जिघर्मि देवयजने । देवयजने पृथिव्या ः पृथिव्या देवयजने देवयजने पृथिव्या ः । देवयजन इति देव = यजने । पृथिव्या - इळाया इळाया ः पृथिव्या ः पृथिव्या - इळाया ः । इळायास्पदं पद मिळाया - इळाया स्पदम् । पदमस्यसि पदं पदमसि । असि घृतवद् घृतव दस्यसि घृतवत् । घृतव त्स्वाहा स्वाहा घृतवद्

घृतवत्स्वाहा । घृतव दिति घृत = वत् । स्वाहा ऽस्मे - अस्मे स्वाहा स्वाहा ऽस्मे । अस्मे रमस्व रमस्वास्मे - अस्मे रमस्व । अस्मे इत्यस्मे । रमस्वास्मे - अस्मे रमस्व रमस्वास्मे । अस्मे ते ते ऽस्मे - अस्मे ते । अस्मे इत्यस्मे । ते बन्धु र्बन्धु स्ते ते बन्धु : । बन्धु स्त्वे त्वे बन्धु र्बन्धु स्त्वे । त्वे रायो रायस्त्वे त्वे राय : । त्वे इति त्वे । रायो - अस्मे - अस्मे रायो रायो - अस्मे । अस्मे रायो रायो ऽस्मे - अस्मे राय : । अस्मे इत्यस्मे । रायो मा मा रायो रायो मा। मा वयँ वयं मा मा वयम् । वयाँ रायो रायो वयँ वयाँ राय : । राय स्पोषेण

पोषेण रायो राय स्पोषेण । पोषेण वि वि पोषेण पोषेण वि । वि यौष्म यौष्म वि वि यौष्म । यौष्म तोतस्तोतो यौष्म यौष्म तोत ः । तोतो रायो राय स्तोत स्तोतो राय ः । राय स्सं॒ सं॒ रायो राय स्सम् । समख्ये ऽख्ये सं॒ समख्ये । अख्ये देव्या देव्या ऽख्ये ऽख्ये देव्या । देव्या धिया धिया देव्या देव्या धिया । धिया सं॒ सन् धिया धिया सम् । सन् दक्षिणया दक्षिणया सं॒ सन् दक्षिणया । दक्षिण योरुचक्षसो रुचक्षसा दक्षिणया दक्षिण योरुचक्षसा । उरुचक्षसा मा मोरुचक्षसो रुचक्षसा मा । उरुचक्ष सेत्युरु = चक्षसा । मा मे मे मा मा मे । म

आयु रायुर्मे म आयु ः । आयु ः प्र प्रायु रायु ः प्र । प्र मोषी र्मोषी ः प्र प्र मोषी ः । मोषीर्मोमो मोषी र्मोषीर्मो । मो - अह महं मो मो - अहम् । मो इति मो । अह न्तव तवाह महन्तव । तव वीरान् वीरा९ स्तव तव वीरान् । वीरान् विदेय विदेय वीरान् वीरान् विदेय । विदेय तव तव विदेय विदेय तव । तव देवि देवि तव तव देवि । देवि सन्दृशि सन्दृशि देवि देवि सन्दृशि । सन्दृशीति सं = दृशि ॥७॥

एषते त एष एषते । ते गायत्रो गायत्रस्ते ते गायत्र ः । गायत्रो भागो भागो गायत्रो गायत्रो भाग ः । भाग इतीति भागो भाग इति । इति मे म इतीति मे । मे सोमाय सोमाय मे मे सोमाय । सोमाय ब्रूताद् ब्रूतात् सोमाय सोमाय ब्रूतात्। ब्रूतात् त्रैष्टुभस् त्रैस्तुभो ब्रूताद् ब्रूतात् त्रैष्टुभ ः । त्रैष्टुभो जागतो जागत स्त्रैस्तुभ स्त्रैष्टुभो जागत ः । त्रैस्तुभ इति त्रैस्तुभ ः । जागत श्छन्दोमानानाञ् छन्दोमा नानाञ् जागतो जागत श्छन्दोमानानाम् । छन्दोमानानाꣳ साम्राज्यꣳ साम्राज्य ञ्छन्दोमानाना ञ्छन्दोमानानाꣳ साम्राज्यम् । छन्दो मानाना मिति च्छन्द ः -

मानानाम् । साम्रांज्यङ् गच्छताद् गच्छतात् साम्रांज्यꣳ साम्रांज्यङ् गच्छतात् । साम्रांज्य मिति सां = राज्यम् । गच्छता दितीति गच्छताद् गच्छता दिति । इति मे म इतीति मे । मे सोमाय सोमाय मे मे सोमाय । सोमाय ब्रूताद् ब्रूतात् सोमाय सोमाय ब्रूतात् । ब्रूतादास्माक आस्माको ब्रूताद् ब्रूतादा स्माक ः । आस्माको ऽस्यस्यास्माक आस्माको ऽसि । असि शुक्र श्शुक्रो ऽस्यसि शुक्र ः । शुक्रस्ते ते शुक्र श्शुक्रस्ते । ते ग्रह्यो ग्रह्य स्ते ते ग्रह्य ः । ग्रह्यो विचितो विचितो ग्रह्यो ग्रह्यो विचित ः । विचितस्त्वा त्वा विचितो विचित स्त्वा ।

विचित इति वि = चित ः । त्वा वि वि त्वा त्वा वि । वि चिन्वन्तु चिन्वन्तु वि वि चिन्वन्तु । चिन्वन्त्विति चिन्वन्तु ।। अभि त्य न्त्य मभ्यभि त्यम् । त्यन् देवन् देवन् त्यन् त्यन् देवम् । देवाँ सवितार९ सवितारन् देवन् देवाँ सवितारम् । सवितार मोण्यो रोण्यो स्सवितार९ सवितार मोण्यो ः । ओण्यो ः कविक्रतुङ् कविक्रतु मोण्यो रोण्यो ः कविक्रतुम् । कविक्रतु मर्चाम्यर्चामि कविक्रतुङ् कविक्रतु मर्चामि । कविक्रतु मिति कवि = क्रतुम् । अर्चामि सत्यसव९ सत्यसव मर्चाम्यर्चामि सत्यसवम् । सत्यसवाँ रत्नधा९ रत्नधा९ सत्यसव९ सत्यसवाँ

रत्नधाम् । सत्यसव मिति सत्य = संवम् । रत्नधा मभ्यभि रत्नधाꣳ रत्नधा मभि । रत्नधा मिति रत्न = धाम् । अभि प्रियं प्रिय मभ्यभि प्रियम् । प्रियं मतिं मतिं प्रियं प्रियं मतिम् । मतिङ् कविङ् कविङ् मतिं मतिङ् कविम् । कवि मिति कविम् ।। ऊर्ध्वा यस्य यस्योर्ध्वोर्ध्वा यस्य । यस्या मति रमति र्यस्य यस्या मति : । अमति र्भा भा - अमति रमति र्भा : । भा - अदिद्युत ददिद्युतद् भा भा - अदिद्युतत् । अदिद्युत त्सवीमनि सवीमन्यदिद्युत ददिद्युत त्सवीमनि । सविमनि हिरण्यपाणि र्हिरण्यपाणि स्सवीमनि सवीमनि हिरण्यपाणि : ।

हिरण्यपाणि रमिमीता मिमीत हिरण्यपाणि र्हिरण्यपाणि रमिमीत । हिरण्यपाणि

रिति हिरण्य = पाणि ः । अमिमीत सुक्रतु स्सुक्रतु रमिमीता मिमीत सुक्रतु ः ।

सुक्रतु ः कृपा कृपा सुक्रतु स्सुक्रतुः कृपा । सुक्रतु रिति सु = क्रतु ः । कृपा

स्वस्स्व ः कृपा कृपा स्व ः । स्व रिति स्व ः ।। प्रजाभ्य स्त्वा त्वा प्रजाभ्य ः

प्रजाभ्य स्त्वा । प्रजाभ्य इति प्र = जाभ्य ः । त्वा प्रजा ः प्रजा स्त्वा त्वा

प्रजा ः । प्रजा स्त्वा त्वा प्रजा ः प्रजा स्त्वा । प्रजा इति प्र = जा ः । त्वा

ऽनुप्राणन्त्वनुप्राणन्तु त्वा त्वाऽनुप्राणन्तु । अनुप्राणन्तु प्रजा ः प्रजा -

अनुप्राणन्त्वनुप्राणन्तु प्रजा : । अनुप्राणन्त्वित्यनु = प्राणन्तु । प्रजास्त्वन् त्वं प्रजा : प्रजा स्त्वम् । प्रजा इति प्र = जा : । त्वमनु प्राणि ह्यनुप्राणिहि त्वन् त्वमनुप्राणिहि । अनुप्राणिहीत्यनु = प्राणिहि ।।८।।

चन्द्रन् त्वा त्वा चन्द्र श्चन्द्र न्त्वा । त्वा चन्द्रेण चन्द्रेण त्वा त्वा चन्द्रेण । चन्द्रेण क्रीणामि क्रीणामि चन्द्रेण चन्द्रेण क्रीणामि । क्रीणामि शुक्रꣳ शुक्रङ् क्रीणामि क्रीणामि शुक्रम् । शुक्राँ शुक्रेण शुक्रेण शुक्रꣳ शुक्राँ शुक्रेण । शुक्रेणा मृत

ममृतं॑ शुक्रेण॑ शुक्रेणा मृतम् । अमृत॑ ममृते॑ नामृते॑ नामृत॑ ममृत॑ ममृतेन ।
अमृते नेत्यमृतेन ।। सग्मे ते॑ ते सग्मे सग्मे ते॑ । ते गो र्गो स्ते॑ ते गो ः । गो
रस्मे - अस्मे गो र्गो रस्मे । अस्मे ते॑ तेऽस्मे - अस्मे ते॑ । अस्मे इत्यस्मे । ते
चन्द्राणि॑ चन्द्राणि॑ ते ते चन्द्राणि॑ । चन्द्राणि तप॑स स्तप॑स श्चन्द्राणि॑ चन्द्राणि
तप॑स ः । तप॑स स्तनू स्तनू स्तप॑स स्तप॑स स्तनू ः । तनू र॑स्यसि तनू स्तनू र॑सि।
असि प्रजाप॑ते ः प्रजाप॑ते रस्यसि प्रजाप॑ते ः । प्रजाप॑ते र्वर्णो वर्ण ः प्रजाप॑ते ः
प्रजाप॑ते र्वर्ण ः । प्रजाप॑ते रिति॑ प्रजा = प॑ते ः । वर्ण ः परमेण॑ परमेण वर्णो

वर्ण : परमेण । परमेण पशुना पशुना परमेण परमेण पशुना । पशुना क्रीयसे क्रीयसे पशुना पशुना क्रीयसे । क्रीयसे सहस्रपोषꣳ सहस्रपोषङ् क्रीयसे क्रीयसे सहस्रपोषम् । सहस्रपोषं पुषेयं पुषेयꣳ सहस्रपोषꣳ सहस्रपोषं पुषेयम् । सहस्रपोषमिति सहस्र = पोषम् । पुषेयं मित्रो मित्र : पुषेयं पुषेयं मित्र : । मित्रो नो नो मित्रो मित्रो न : । न एही ह्या नो न एहि । एहि । इहि सुमित्रध स्सुमित्रध इहीहि सुमित्रध : । सुमित्रध इन्द्रस्ये न्द्रस्य सुमित्रध स्सुमित्रध इन्द्रस्य। सुमित्रध इति सु = मित्रध : । इन्द्रस्योरु मूरु मिन्द्रस्ये न्द्रस्योरुम् । ऊरुमाविश

विशोरु मूरुमाविंश । आविंश । विश दक्षिणन् दक्षिणँ विश विश दक्षिणम् ।
दक्षिण मुशन्नुशन् दक्षिणन् दक्षिण मुशन् । उशन्नुशन्त मुशन्त मुशन्नुश न्नुशन्तम् ।
उशन्तं स्योन स्स्योन उशन्त मुशन्तं स्योन ः । स्योन स्स्योनं स्योनं स्योन
स्स्योन स्स्योनम् । स्योनं स्वान स्वान स्योनं स्योनं स्वान । स्वान भ्राज
भ्राज स्वान स्वान भ्राज । भ्राजाङ्घारे ऽङ्घारे भ्राज भ्राजाङ्घारे । अङ्घारे बंभारे
बंभारे ऽङ्घारे ऽङ्घारे बंभारे । बंभारे हस्त हस्त बंभारे बंभारे हस्त । हस्त
सुहस्त सुहस्त हस्त हस्त सुहस्त । सुहस्त कृशानो कृशानो सुहस्त सुहस्त

कृशानो । सुहस्तेति सु = हस्त । कृशान एत एते कृशानो कृशान एते । कृशानो इति कृशानो । एते वो व एत एते व ः । वस्सोमक्रयणा स्सोमक्रयणा वो व स्सोमक्रयणा ः । सोमक्रयणा स्ताꣳ स्ता न्त्सोमक्रयणा स्सोमक्रयणा स्तान् । सोमक्रयणा इति सोम = क्रयणा ः । तान् रक्षध्वꣳ रक्षध्वन् ताꣳ स्तान् रक्षध्वम् । रक्षध्वं मा मा रक्षध्वꣳ रक्षध्वं मा । मा वो वो मा मा व ः । वो दभन्दभ न्वो वो दभन् । दभन् परि परि दभन् दभन् परि । परि मा मा परि परि मा । मा ऽग्ने ऽग्ने मा मा ऽग्ने । अग्ने दुश्चरिताद् दुश्चरिता दग्ने ऽग्ने दुश्चरितात् ।

दुश्चरिताद् बाधस्व बाधस्व दुश्चरिताद् दुश्चरिताद् बाधस्व । दुश्चरिता दिति दु ः = चरितात् । बाधस्वा मा मा बाधस्व बाधस्वामा । आमा । मा सुचरिते सुचरिते मा मा सुचरिते । सुचरिते भज भज सुचरिते सुचरिते भज । सुचरित इति सु = चरिते । भजोदुद् भंज भजोत् । उदा युषा ऽऽयुषो दुदा युषा । आयुषा स्वायुषा स्वायुषा ऽऽयुषा ऽऽयुषा स्वायुषा । स्वायुषो दुत्स्वायुषा स्वायुषोत् । स्वायुषेति सु = आयुषा । उदस्था मस्था मुदु दस्थाम् । अस्था ममृता नमृता नस्था मस्था ममृतान् । अमृताँ - अन्व न्वमृता नमृताँ - अनु ।

अन्वित्यनु ।। प्रति पन्थां पन्थां प्रति प्रति पन्थाम् । पन्था मपद्महृयपद्महि पन्थां पन्था मपद्महि । अपद्महि स्वस्तिगाऽ स्वस्तिगा मपद्महृयपद्महि स्वस्तिगाम् । स्वस्तिगा मनेहसं मनेहसंऽ स्वस्तिगाऽ स्वस्तिगा मनेहसम् । स्वस्तिगा मिति स्वस्ति = गाम् । अनेहस मित्य नेहसम् ।। येन विश्वा विश्वा येन येन विश्वा : । विश्वा : परि परि विश्वा विश्वा : परि । परि द्वषो द्विष : परि परि द्विष : । द्विषो वृणक्ति वृणक्ति द्विषो द्विषो वृणक्ति । वृणक्ति विन्दते विन्दते वृणक्ति वृणक्ति विन्दते । विन्दते वसु वसु विन्दते विन्दते वसु । वस्विति वसु ।।९।।

अदित्या स्त्वक् त्व गदित्या - अदित्या स्त्वक् । त्वगस्यसि त्वक् त्वगसि ।
अस्यदित्या - अदित्या - अस्यस्यदित्यै । अदित्यै सद स्सदो ऽदित्या - अदित्यै
सदः । सद आसीद सीदा सद स्सद आसीद । आसीद । सीदेति सीद ॥
अस्तभ्नाद् द्यान् द्या मस्तभ्ना दस्तभ्नाद् द्याम् । द्या मृषभ ऋषभो द्यान् द्या
मृषभः । ऋषभो - अन्तरिक्ष मन्तरिक्ष मृषभ ऋषभो - अन्तरिक्षम् । अन्तरिक्ष
ममिमीता मिमी तान्तरिक्ष मन्तरिक्ष ममिमीत । अमिमीत वरिमाणँ वरिमाण

ममिमीता मिमीत वरिमाणम् । वरिमाणम् पृथिव्या : पृथिव्या वरिमाणँ वरिमाणम् पृथिव्या : । पृथिव्या इति पृथिव्या : ।। आसी दद सीद दासिदत् । असीदद्विश्वा विश्वा सीदद सीद द्विश्वा । विश्वा भुवनानि भुवनानि विश्वा विश्वा भुवनानि । भुवनानि सम्राट् सम्राड् भुवनानि भुवनानि सम्राट् । सम्राड् विश्वा विश्वा सम्राट् सम्राड्विश्वा । सम्रळिति सं = राट् । विश्वे दिद्विश्वा विश्वेत् । इत्तानि तानीदित्तानि । तानि वरुणस्य वरुणस्य तानि तानि वरुणस्य । वरुणस्य व्रतानि व्रतानि वरुणस्य वरुणस्य व्रतानि । व्रतानीति व्रतानि ।। वनेषु वि वि वनेषु

वनेषु वि । व्यन्तरिक्ष मन्तरिक्षँ वि व्यन्तरिक्षम् । अन्तरिक्षन् ततान तता नान्तरिक्ष मन्तरिक्षन् ततान । ततान वाजँ वाजन् ततान ततान वाजम् । वाज मर्वत्स्वर्वत्सु वाजँ वाज मर्वत्सु । अर्वत्सु पय ः पयोऽर्व त्स्ववत्सु पय ः । अर्वत्स्वित्यर्वत् = सु । पय उस्रिया सूस्रियासु पय ः पय उस्रियासु । उस्रियास्वित्युस्रियासु ।। हृत्सु क्रतुङ् क्रतुꣳ हृत्सु हृत्सु क्रतुम् । हृत्स्वितिहृत् = सु । क्रतुँ वरुणो वरुण ः क्रतुङ् क्रतुँ वरुण ः । वरुणो विक्षु विक्षु वरुणो वरुणो विक्षु । विक्ष्वग्नि मग्निँ विक्षु विक्ष्वग्निम् । अग्निन् दिवि दिव्यग्नि मग्निन् दिवि ।

दिवि सूर्यᳫं सूर्यन् दिवि दिवि सूर्यम् । सूर्य मदधा ददधात्सर्यᳫं सूर्य मदधात् । अदधात्सोमᳫं सोम मदधा ददधा त्सोमम् । सोम मद्रा - अद्रौ सोमᳫं सोम मद्रौ । अद्रा इत्यद्रौ ।। सूर्यस्य चक्षु श्चक्षु स्सूर्यस्य सूर्यस्य चक्षु : । चक्षु रारोह रोहा चक्षु श्चक्षु रारोह । आरोह । रोहाग्ने रग्ने रोह रोहाग्ने : । अग्ने रक्ष्णो ऽक्ष्णो ऽग्ने रग्ने रक्ष्ण : । अक्ष्ण : कनीनकाङ् कनीनका मक्ष्णो ऽक्ष्ण : कनी नकाम् । कनीनका मिति कनीनकाम् ।। यत्रैतशेभि रेतशेभि र्यत्र यत्रैतशेभि : । एतशेभि रीयस ईयस एतशेभि रेतशेभि रीयसे । ईयसे भ्राजमानो भ्राजमान ईयस ईयसे

भ्राजमान ः । भ्राजमानो विपश्चिता विपश्चिता भ्राजमानो भ्राजमानो विपश्चिता ।
विपश्चितेति विप ः = चिता ।। उस्रा एतमित मोस्रा - उस्रा - एतम् । एतम् ।
इतन् धूर्वाहौ धूर्वाहा इतमितन् धूर्वाहौ । धूर्वाहौ युज्येथाँ य्युज्येथान् धूर्वाहौ
धूर्वाहौ युज्येथाम् । धूर्वाहा इति धू ः - वाहौ । युज्येथा मनश्रू - अनश्रू
युज्येथाँ य्युज्येथा मनश्रू । अनश्रू - अवीरहणा - अवीरहना - अनश्रू - अनश्रू -
अवीरहणौ । अनश्रू इत्यनश्रू । अवीरहणौ ब्रह्मचोदनौ ब्रह्म चोदना - अवीरहना
- अवीरहणौ ब्रह्मचोदनौ । अवीरहना इत्यवीर = हनौ । ब्रह्मचोदनौ स्वस्ति

स्वस्ति ब्रह्मचोदनौ ब्रह्मचोदनौ स्वस्ति । ब्रह्मचोदना इति ब्रह्म = चोदनौ ।
स्वस्ति यजमानस्य यजमानस्य स्वस्ति स्वस्ति यजमानस्य । यजमानस्य गृहान्
गृहान् यजमानस्य यजमानस्य गृहान् । गृहान् गच्छतङ् गच्छतङ् गृहान् गृहान्
गच्छतम् । गच्छतं भद्रो भद्रो गच्छतङ् गच्छतं भद्र : । भद्रो मे मे भद्रो भद्रो
मे । मे ऽस्यसि मे मे ऽसि । असि प्र प्रास्यसि प्र । प्रच्यवस्व च्यवस्व प्र प्र
च्यवस्व । च्यवस्व भुवो भुव श्च्यवस्व च्यवस्व भुव : । भुव स्पते पते भुवो भुव
स्पते । पते विश्वानि विश्वानि पते पते विश्वानि । विश्वान्यभ्यभि विश्वानि

विश्वान्यभि । अभि धामानि धामान्यभ्यभि धामानि । धामानि मा मा धामानि

धामानि मा । मा त्वा त्वा मा मा त्वा । त्वा परिपरिण : परिपरिण स्त्वा त्वा

परिपरिण : । परिपरिण : परिपन्थिन : परिपन्थिन : परिपरिण : परिपरिण :

परिपन्थिन : । परिपरिण इति परि = परिण : । परिपन्थिनो वृका वृका :

परिपन्थिन : परिपन्थिनो वृका : । परिपन्थिन इति परि = पन्थिन : । वृका -

अघायवो ऽघयवो वृका वृका - अघायव : । अघायवो विदन्विदन्न घयवो

ऽघायवो विदन् । अघयव इत्यघ = यव : । विदञ्छ्येनश् श्येनो विदन्विद

ञ्छ्येन ः । श्येनो भूत्वा भूत्वा श्येन श्श्येनो भूत्वा । भूत्वा परा परा भूत्वा भूत्वा परा । परा पत पत परा परा पत । पत यजमानस्य यजमानस्य पत पत यजमानस्य । यजमानस्य गृहान् गृहान् यजमानस्य यजमानस्य गृहान् । गृहान् गच्छ गच्छ गृहान् गृहान् गच्छ । गच्छ तत्तद् गच्छ गच्छ तत् । तन्नौ नौ तत्तन्नौ । नौ स१ँ स्कृत१ँ स१ँ स्कृतन् नौ नौ स१ँ स्कृतम् । स१ँस्कृत मिति स१ँस्कृतम् ।। नमो मित्रस्य मित्रस्य नमो नमो मित्रस्य । मित्रस्य वरुणस्य वरुणस्य मित्रस्य मित्रस्य वरुणस्य । वरुणस्य चक्षसे चक्षसे वरुणस्य वरुणस्य

चक्षसे । चक्षसे महो मह श्चक्षसे चक्षसे मह ः । महो देवाय देवाय महो महो
देवाय । देवाय तत्तद् देवाय देवाय तत् । त दृत मृतन् तत्त दृतम् । ऋतॉं
संपर्यत सपर्यत ऋत मृतॉं संपर्यत । सपर्य तेति सपर्यत ।। दूरेदृशे देवजाताय
देवजाताय दूरेदृशे दूरेदृशे देवजाताय । दूरेदृश इति दूरे = दृशे । देवजाताय
केतवे केतवे देवजाताय देवजाताय केतवे । देवजातायेति देव = जाताय । केतवे
दिवो दिव ः केतवे केतवे दिव ः । दिव स्पुत्राय पुत्राय दिवो दिव स्पुत्राय ।
पुत्राय सूर्याय सूर्याय पुत्राय पुत्राय सूर्याय । सूर्याय शाँसत श२ंसत सूर्याय सूर्याय

शाँसत । शाँसतेति शाँसत ।। वरुणस्यो त्तंभन मुत्तंभनँ वरुणस्य वरुणस्योत्तंभनम्। उत्तंभन मस्यस्युत्तंभन मुत्तंभन मसि । असि स्कम्भसर्जनी स्कंभसर्जनी - अस्यसि स्कंभसर्जनी । स्कंभसर्जनी स्थस् स्थस् स्कंभसर्जनी स्कंभसर्जनी स्थ : । स्कंभसर्जनी इति स्कंभ = सर्जनी । स्थ ऋतसदन्यृत सदनी स्थ स्थ ऋतसदनी । ऋतसदन्यृत सदन मृतसदन मृतसदन्यृत सदन्यृत सदनम् । ऋतसद नीत्यृत = सदनी । ऋतसदन मृतसदनी मृतसदनी मृतसदन मृतसदन मृतसदनीम् । ऋतसदन मित्यृत = सदनम् । ऋतसदनी मा सीद सीद ऋतसदनी मृतसदनी

मासीद । ऋतसदनी मित्यृत = सदनीम् । आसीद । सीदेतिसीद ।। या ते ते या

या ते । ते धामानि धामानि ते ते धामानि । धामानि हविषा हविषा धामानि

धामानि हविषा । हविषा यजन्ति यजन्ति हविषा हविषा यजन्ति । यजन्ति ता

ता यजन्ति यजन्ति ता । ता ते ते ता ता ते । ते विश्वा विश्वा ते ते विश्वा ।

विश्वा परिभू : परिभू र्विश्वा विश्वा परिभू : । परिभू रस्त्वस्तु परिभू :

परिभू रस्तु । परिभू रिति परि = भू : । अस्तु यज्ञँ य्यज्ञ मस्त्वस्तु यज्ञम् ।

यज्ञमिति यज्ञम् ।। गयस्फान : प्रतरण : प्रतरणो गयस्फानो गयस्फान :

प्रतरण : । गयस्फान इति गय = स्फान : । प्रतरणस्सुवीर स्सुवीर : प्रतरण : प्रतरण स्सुवीर : । प्रतरण इति प्र = तरण : । सुवीरो ऽवीरहा ऽवीरहा सुवीर स्सुवीरो ऽवीरहा । सुवीर इति सु = वीर : । अवीरहा प्र प्रावीरहा ऽवीरहा प्र। अवीर हेत्यवीर = हा । प्र चर चर प्र प्र चर । चरा सोम सोम चर चरा सोम । सोम दुर्या न्दुर्या न्सोम सोम दुर्यान् । दुर्या निति दुर्यान् ।।१०।।

## इति चतुर्थोऽध्याय :

